५४ यथाज्ञापयतीतिछंदोभंगआर्षः ५५ यस्ययन्मनोरथविषयमिष्टंतत्सर्वमलौकिकंलौकिकसामग्रीजन्यविलक्षणमसृजत्
५६ ५७ ५८ ५९ प्रययौभरतःरामाश्रमद्वारंप्रतीतिशेषः ६० शत्रुघ्नादिभिःसहसर्वंतपस्विमंडलंतपस्विनामाश्रममंडलं-

आतिथ्यंकर्तुमिच्छामिससैन्यस्यतवानघ अद्यभुक्त्वाससैन्यस्त्वंश्वोगंतारामसन्निधिम् ५४ यथाज्ञा
पयतिमवांस्तथेतिभरतोऽब्रवीत् भरद्वाजस्तपःस्पृष्वामौनीहोमगृहेस्थितः ५५ दध्यौकामदुघांकाम
वर्षिणीकामदोमुनिः असृजत्कामधुक्सर्वंयथाकाममलौकिकम् ५६ भरतस्यससैन्यस्ययथेष्टंचमनो
रथम् तथाववर्षसकलंतृप्तास्तेसर्वसैनिकाः ५७ वसिष्ठंपूजयित्वाग्रेशास्त्रदृष्टेनकर्मणा पश्चात्ससैन्यं
भरतंतर्पयामासयोगिराट् ५८ उषित्वादिनमेकंतुआश्रमेस्वर्गसन्निभे अभिवाद्यपुनःप्रातर्भरद्वाज
सहानुजः भरतस्तुकृतानुज्ञःप्रययौरामसन्निधिम् ५९ चित्रकूटमनुप्राप्यदूरेसंस्थाप्यसैनिकान्
रामसंदर्शनाकांक्षीप्रययौभरतःस्वयम् ६० शत्रुघ्नेनसमंत्रेणगुहेनचपरंतपः तपस्विमंडलंसर्वंवि
चिन्वानोन्यवर्तत ६१ अहष्ट्वारामभवनमपृच्छदृषिमंडलम् कुत्रास्तेसीतयासार्द्धंलक्ष्मणेनरघूत्तमः ६२
ऊचुस्तेग्रेगिरेःपश्चाद्गंगायाउत्तरेतटे विविक्तंरामसदनंरम्यकाननमंडितम् ६३ सफलैराम्रपनसैःकद
लीखंडसंवृतम् चंपकैःकोविदारैश्चपुन्नागैर्विपुलैस्तथा एवंदर्शितमालोक्यमुनिभिर्भरतोग्रतः हर्षाद्ययौ
रघुश्रेष्ठभवनंमंत्रिणासह ६५

विचिन्वानोरामाश्रममलब्ध्वान्यवर्तत निवृत्तव्यापारइवासीत् ६१ तत्रऋषिमंडलमपृच्छत् ६२ विविक्त
मेकांतदेशवर्ति ६३ कदलीखंडःकदलीसमूहः ६४ एवंमुनिभिर्दर्शितंरघुश्रेष्ठभवनंअग्रतोभरतःसमालोक्यमंत्रिणासहहर्षाद्ययावितिसंबंधः ६५

रामाभिरामं रामेणरामवासेनाभिरामम् ६६ इतिश्रीम॰ अयोध्याकांडेअष्टमःसर्गः ८ नवमेभरतोगत्वाश्रीरामस्यैवसन्नि
धौ तेनसार्द्धंगंतुमनानागमद्गुरुबोधितः १ सीतारामपदश्रुक्तत्वादिविष्टंआश्रमपदसमीपंआश्रमस्थानसमीपदेशंगत्वा



ददर्शदूराद्‌तिभास्करंशुभंरामस्यगेहंमुनिवृंदसेवितम् वृक्षाग्रसंलग्नसुवल्कलाजिनंरामाभिरामं
भरतःसहानुजः ६६ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअयोध्याकांडेअष्टमःसर्गः ८
श्रीमहादेवउवाच अथगत्वाश्रमपदसमीपंभरतोमुदा सीतारामपदैर्युक्तंपवित्रमभिशोभनम् १
सतत्रवज्रांकुशवारिजांचितध्वजादिचिन्हानिपदानिसर्वतः ददर्शरामस्यभुवोऽतिमंगलान्यचेष्टय
त्पादरजःससानुजः २ अहोसुधन्योऽहममूनिरामपादारविंदांकितभूतलानि पश्यामियत्पादरजोवि
मृग्यब्रह्मादिदेवैःश्रुतिभिश्चनित्यम् ३ इत्यद्भुतप्रेमरसाप्लुताशयोविगाढचेतारघुनाथभावने आनंद
जाश्रुस्नपितस्तनांतरःशनैरवापाश्रमसन्निधिंहरेः ४ सतत्रदृष्ट्वारघुनाथमास्थितंदूर्वादलश्याममलमा
यतेक्षणम् जटाकिरीटंनववल्कलांबरंप्रसन्नवक्त्रंतरुणारुणद्युतिम् ५

१ तत्रवज्रांकुशकमलपूजितध्वजादि
चिन्हयुतानिपदानिददर्शध्वजेपूजितत्वंस्पष्टरेखत्वंदृष्ट्वा तत्पादचिन्हितदेशरजःसुअचेष्टयत्लुलुठे २ यत्पादरजइत्यादिव्याख्यातंप्राक् ३
अद्भुतोयःप्रेमरसःप्रीतिरसस्तेनाप्लुतोव्याप्तआशयोंऽतःकरणंयस्यरघुनाथभावनेविगाढचेता तत्परचित्तइत्यर्थः ४ ५

त्वरातरयेत्यर्थः ६ ७ तृषार्तागौर्यथाजलंप्रतिगच्छति एवंमातरोराघवंप्रतिजग्मुः ८ साश्रुयथातथाववंदे साचपुत्र मालिंग्यभर्तृवियोगस्मरणेनातीवदुःखिता आसीत् इतिशेषः ९ इतराश्चजननीस्तथासाश्रुनत्वास्थितइतिशेषः १० धन्यो

विलोकयंतंजनकात्मजांशुभांसौमित्रिणासेवितपादपंकजम् तदाभिदुद्राव रघूत्तमंशुचाहर्षाच्चतत्सा द्युगत्वराऽग्रहीत् ६ रामस्तमाकृष्यसुदीर्घबाहुर्दोर्भ्यांपरिष्वज्यसिषिंचनेत्रजैः जलैरथांकोपरि सन्यवेशयत्पुनःपुनः संपरिषस्वजेविभुः ७ अथतामातरः सर्वाः समाजग्मुस्त्वरान्विताः राघवंद्रष्टु कामास्तास्तृषार्तागौर्यथाजलम् ८ रामः स्वमातरंवीक्ष्यद्रुतमुत्थायपादयोः ववंदे साश्रुसापुत्रमा लिंग्यातीवदुःखिता ९ इतराश्चतथानत्वाजननीरघुनंदनः ततः समागतंहृष्टावसिष्ठंमुनिपुंगवम् १० साष्टांगंप्रणिपत्याह धन्योऽस्मीतिपुनःपुनः यथार्हमुपवेश्याह सर्वानेवरघूद्वहः ११ पितामेकुशलीकिं वामांकिमाहातिदुःखितः वसिष्ठस्तमुवाचेदंपितातेरघुनंदन १२ त्वद्वियोगाभितप्तात्मात्वामेवप- रिचिंतयन् रामरामेतिसीतेतिलक्ष्मणेतिममारह १३ श्रुत्वातत्कर्णशूलाभंगुरोर्वचनमंजसा हाहतोऽस्मीतिपतितोरुदन्रामः सलक्ष्मणः १४

स्मितदर्शनादितिभावः यथार्हंयथायोग्यम् ११ पितामेकुश लीतिप्रश्नः स्ववियोगेकुशलमसंभाव्यमित्याशयेनाह किंवेति तथैवसंभावनयाहातिदुःखितः प्राणवियोगजनकयापी ड्यापीडितःकिमाह १२ रामरामेतीत्यादेर्वदन्नितिशेषः १३ कर्णशूलाभंकर्णयोः शूलरोगतुल्यम् १४

घृणाकरदयासमुद्र १५ अतोभृशंरामविलापादप्यधिकमित्यर्थः १६ शांतंवचनैः पूर्वराजवियोगचरितैः संसारानित्यताप्रति
पादकैर्वचनैः तत्वज्ञानोपदेशैश्च १७ जलकांक्षिणोरामइत्यादि १८ इंगुदीतापसतरुः ननुराजायोग्यमेतत्तत्राह वयमिति १९



ततोनुरुरुदुःसर्वामातरश्चतथाऽपरे हातातमांपरित्यज्यक्वगतोऽसिघृणाकर १५ अनाथोऽस्मिमहाबा
होमांकोवालालयेदितः सीताचलक्ष्मणश्चैवविलेपतुरतोभृशम् १६ वसिष्ठःशांतवचनैःशमयामासतां
श्शुचम् ततोमंदाकिनींगत्वास्नात्वातेवीतकल्मषाः १७ राज्ञेददुर्जलंतत्रसर्वेतेजलकांक्षिणे पिंडान्निर्वा
पयामासरामोलक्ष्मणसंयुतः १८ इंगुदीफलपिण्याकरचितान्मधुसंप्लुतान् वयंयदन्नाःपितरस्तदन्नाः
स्मृतिनोदिताः १९ इतिदुःखाश्रुपूर्णाक्षःपुनःस्नात्वागृहंययौ सर्वेरुदित्वासुचिरंस्नात्वाजग्मुस्तथाश्र
मम् २० तस्मिंस्तुदिवसेसर्वेउपवासंप्रचक्रिरे ततःपरेद्युर्विमलेस्नात्वामंदाकिनीजले २१ उपविष्टं
समागम्यभरतोराममब्रवीत् रामराममहाभागस्वात्मानमभिषेचय २२ राज्यंपालयपित्र्यंतेज्येष्ठ
स्त्वंमेपितातथा क्षत्रियाणामयंधर्मोयत्प्रजापरिपालनम् २३ इष्ट्वायज्ञैर्बहुविधैःपुत्रानुत्पाद्यतंत
वे राज्येपुत्रंसमारोप्यगमिष्यसिततोवनम् २४ इदानींवनवासस्यकालोनैवप्रसीदमे मातुर्मेदु
ष्कृतंकिंचित्स्मर्तुंनार्हसिपाहिनः २५

२० २१ २२ पित्र्यंपितुरागतं यथापिताज्येष्ठस्त्वंमेतथापितृसदृशःएवं
चपितरिजीवति यथाराज्यानधिकारस्तथात्वयिजीवत्यपीतिभावः किंच तवाप्ययमेवधर्मइत्याह क्षत्रियाणामिति २३
तस्मादिष्ट्वेति तंतवेवंशाविच्छेदाय २४ यन्मेमातुःकिंचिद्दुष्कृतंतत्स्मर्तुंनार्हसीतिसंबंधः २५ ७ ७

२६ अतिभक्तितः भरतस्यातिभक्तिं दृष्ट्वेत्यर्थः २७ त्वदुक्तं तथैव सत्यमेव तथापि पित्राज्ञापालनं मे आवश्यकमित्याह किंत्विति नव पंच चतुर्दश २८ अखिलं दत्तमित्यब्रवीदित्यन्वयः २९ ३० अतियत्नतः पितृवचनकर्तव्यत्वे हेतुमाह पितुरिति स्वतं

इत्युक्त्वा चरणौ भ्रातुः शिरस्याधाय भक्तितः रामस्य पुरतः साक्षाद्दंडवत्पतितो भुवि २६ उत्थाप्य राघवः शीघ्रमारोप्यांके तिभक्तितः उवाच भरतं रामः स्नेहार्द्रनयनः शनैः २७ शृणु वत्स प्रवक्ष्यामि त्वयोक्तं यत्तथैव तत् किंतु मामब्रवीत्तातो नव वर्षाणि पंच च २८ उषित्वा दंडकारण्ये पुरं पश्चात्समाविश इदानीं भरतायेदं राज्यं दत्तं मयाखिलम् २९ ततः पित्रैव सुव्यक्तं राज्यं दत्तं तवैव हि दंडकारण्यराज्यं मे दत्तं पित्रा तथैव च ३० अतः पितुर्वचः कार्यमावाभ्यामतियत्नतः पितुर्वचनमुल्लंघ्य स्वतंत्रो यस्तु वर्तते ३१ स जीवन्नेव मृतको देहांते निरयं व्रजेत् तस्माद्राज्यं प्रशाधि त्वं वयं दंडकपालकाः ३२ भरतस्त्वब्रवीद्रामं कामुको मूढधीः पिता स्त्रीजितो भ्रांतहृदय उन्मत्तो यदि वक्ष्यति तत्सत्यमिति न ग्राह्यं भ्रांतवाक्यं यथा सुधीः ३३ श्रीरामउवाच न स्त्रीजितः पिता ब्रूयान्न कामी नैव मूढधीः पूर्वं प्रतिश्रुतं तस्यै सत्यवादी ददौ भयात् ३४

त्रः स्वेच्छाचारी ३१ ३२ कामुकत्वादेव मूढधीः यदि वक्ष्यति यद्वक्ष्यतीत्यर्थः सुधीः पुरुषो यथा भ्रांतवाक्यं सत्यमिति न गृण्हाति तथा त्वयोक्तविशिष्टपितृवाक्यं न ग्राह्यमित्यर्थः ३३ ब्रूयात् उक्तवानित्यर्थः न त्र्यमेकैकमपि तत्रासंभावि किं पुनः समुदितमिति बोधयितुं प्रतिश्रुतं प्रतिज्ञातं भयात् प्रतिज्ञाभंगभयात् ३४ ७ ७

यतोमहतांनरकादप्यधिकासत्याद्भीतिः तेषांफलतोऽप्युपायैतिभयमित्यर्थः अहमपिराघवएवसन् तस्यैकैकेय्यै सत्यंकरोमि वनवा
सादिकमित्येतत्प्रतिश्रुतंवाक्यम् ३५ कथमसत्यंकुर्यामित्यर्थः ३६ तथैवत्वमतिनिधितया त्वहृदेवेत्यर्थः ३७ व्यत्ययंराज्यव-



असत्याद्भीतिरधिकामहतांनरकादपि करोमीत्यहमप्यैतत्सत्यंतस्यैप्रतिश्रुतम् ३५ कथंवाक्यमहं
कुर्यामसत्यंराघवोहिसन् इत्युदीरितमाकर्ण्यरामस्यभरतोब्रवीत् ३६ तथैवचीरवसनोवनेव
स्याम्यसमत्व्रत चतुर्दशसमास्त्वंतुराज्यंकुरुयथासुखम् ३७ श्रीरामउवाच पित्रादत्तं
तवैवेतद्राज्यमह्यवनंददौ व्यत्ययंयद्यहंकुर्यामसत्यंपूर्ववत्स्थितम् ३८ भरतउवाच
अहमप्यागमिष्यामिसेवेत्वांलक्ष्मणोयथा नोचेत्प्रायोपवेशेनत्यजाम्येतत्कलेवरम् ३९ इत्येवं
निश्चयंकृत्वादर्भानास्तीर्यचातपे मनसापिविनिश्चित्यप्राङ्मुखोपविवेशसः ४० भरतस्यापिनि
र्बंधंदृष्ट्वारामोऽतिविस्मितः नेत्रांतसंज्ञांगुरवेचकाररघुनंदनः ४१ एकांतेभरतंप्राहवसिष्ठोज्ञानि
नांवरः वत्सगुह्यंशृणुत्वेदंममवाक्यात्सुनिश्चितम् ४२ रामोनारायणःसाक्षाद्ब्रह्मणायाचितःपुरा
रावणस्यवधार्थायजातोदशरथात्मजः ४३

नवासयोरित्यर्थः ३८ आगमिष्यामिवनमितिशेषः ३९ निश्चयं
कृत्वोवाचेतिशेषः आतपेइत्यनेनसर्वथाजीविताशापरित्यागः प्राङ्मुखउपविवेश संधिरार्षः ४० नेत्रांतसंज्ञां नेत्रांतेना
स्योत्थापनंकुर्विंतिसूचनाम् ४१ ४२ साक्षात् नारायणः सर्वांतर्यामीत्यर्थः ४३ ७ ७

योगमायातच्छक्तिरूपा ४४ ४५ सादशरथस्त्री अत्यंतंरामेप्रीतिमतीच ४६ ४७ ४८ राज्याय राज्यपालनसामर्थ्यलाभाय ४९
५० ५१ नवपंचसमांते ५२ ५३ ५४ स्रवन्नेत्रजलासती आकुला कृतापराधत्वादितिव्याकुलेत्यर्थः राज्यविघातनंराज्यविघा

योगमायापिसीतेतिजाताजनकनंदिनी शेषोऽपिलक्ष्मणोजातोराममन्वेतिसर्वदा ४४ रावणंहंतुकामा-
स्तेगमिष्यंतिनसंशयः कैकेय्यावरदानादियच्चान्यन्निष्ठुरभाषणम् ४५ सर्वदेवकृतंनोचेदेवंसाभाष
येत्कथम् तस्मात्त्यजाग्रहंताततरामस्यविनिवर्तने ४६ निवर्तस्वमहासैन्यैर्भ्रातृभिःसहितःपुरम् रा
वणंसकुलंहत्वाशीघ्रमेवागमिष्यति ४७ इतिश्रुत्वागुरोर्वाक्यंभरतोविस्मयान्वितः गत्वासमीपंरामस्य
विस्मयोत्फुल्ललोचनः ४८ पादुकेदेहिराजेंद्रराज्यायतवपूजिते तयोःसेवांकरोम्येवयावदागमनंतव ४९
इत्युक्त्वापादुकेदिव्येयोजयामासपादयोः रामस्यतेददौरामोभरतायातिभक्तितः ५० गृहीत्वापादुकेदि
व्येभरतोरत्नभूषिते रामंपुनःपरिक्रम्यप्रणनामपुनःपुनः ५१ भरतःपुनराहेदंभक्त्यागद्गदयागिरा
नवपंचसमांतेतुप्रथमेदिवसेयदि ५२ नागमिष्यसिचेद्रामप्रविशामिमहानलम् बाढमित्येवतंरामो
भरतंसन्यवर्तयत् ५३ ससैन्यःसवसिष्ठश्चशत्रुघ्नसहितःसुधीः मातृभिर्मंत्रिभिःसार्द्धंगमनायोपचक्र
मे ५४ कैकेयीराममेकांतेस्रवन्नेत्रजलाकुला प्रांजलिःप्राहहेरामतवराज्यविघातनम् ५५ कृतंम-
यादुष्टधियामायामोहितचेतसा क्षमस्वममदौरात्म्यंक्षमासाराहिसाधवः ५६

नः ५५ मायामोहितचेतसे
त्यनेनवस्तुतोममापराधएवनेतिसूचितमंगीकृत्यापिस्वापराधमाह क्षमस्वेति क्षमैवसारःसर्वगुणप्रधानंयेषामित्यर्थः ५६

संप्रतिमायापगमंध्वनयति त्वमिति नन्वहंमनुष्योनपरमात्मेतिचेत्तत्राह मायेति एषातेमायैवेतिभावः त्वयैवेति तस्मादंतर्याम्येव त्वमितिभावः एवंचत्वत्प्रेरणयैवतथाकृतवत्यामेनापराधइतिध्वनिः ५७ तदेवोपपादयति त्वदिति स्वतोऽस्वतंत्रंत्वत्प्रेरणांवि नाकिंकरोति नकिमपिकरोतीतिभावः कुहकोविस्मापकः गुप्ततयातत्सूत्रचालनेन तन्नर्तनाद्विस्मयोत्पादकइतियावत् ५८

त्वंसाक्षाद्विष्णुरव्यक्तःपरमात्मासनातनः मायामानुषरूपेणमोहयस्यखिलंजगत् त्वयैवप्रेरितोलोकः कुरुतेसाध्वसाधुवा ५७ त्वदधीनमिदंविश्वमस्वतंत्रंकरोतिकिम् यथाकृत्रिमनर्तक्योनृत्यंतिकुहके च्छया ५८ त्वदधीनातथामायानर्तकीबहुरूपिणी त्वयैवप्रेरिताहंचदेवकार्यंकरिष्यता ५९ पापि ष्ठंपापमनसाकर्माचरमरिंदम अद्यप्रतीतोसिममदेवानामप्यगोचरः ६० पाहिविश्वेश्वरानंतजग न्नाथनमोऽस्तुते. छिंधिस्नेहमयंपाशंपुत्रवित्तादिगोचरम् ६१ त्वज्ज्ञानामलखड्गेनत्वामहंशरणंग ता कैकेय्यावचनंश्रुत्वारामःसस्मितमब्रवीत् ६२ यदाहमांमहाभागेनानृतंसत्यमेवतत् मयैवप्रेरि तावाणीतववक्त्राद्विनिर्गता ६३ देवकार्यार्थसिद्ध्यर्थमत्रदोषःकुतस्तव गच्छत्वंहृदिमांनित्यंभावयंतीदि वानिशम् ६४

त्वदधीनेति अनेनमायायास्तत्कार्यस्यातिजडत्वंसूचितम् नन्वेवंस्वदुःखफलकंत्वत्प्रेरणंमयाकथंकर्त- व्यंतत्राह देवकार्यंकरिष्यतेति ५९ममययाशेषेषष्ठी प्रतीतोऽसि वास्तवस्वरूपेणज्ञातोऽसि इदमपित्वत्प्रसादादेवेतिभा वः अन्यथादेवानामप्यविषयस्य कथमज्ञानविषयतास्यादितिभावः ६० अतः प्रार्थयतेपाहीति पुत्रवित्तादिविषयस्नेहरू पंपाशमित्यर्थः ६१ त्वज्ज्ञानामलखड्गेनेतिपूर्वान्वयि ६२ ६३ देवकार्यरूपार्थस्यसिद्ध्यर्थमित्यर्थः ६४ ७

मद्भक्त्यासर्वविषयेषुस्नेहत्यागपूर्वमहर्निशंमदा वनमेवमद्भक्तिस्तयाममरागद्वेषाभावान्मत्तोभयंमास्त्वित्याह अहमिति मम द्वेष्योवाप्रियोवानास्ति कल्पकस्येवमायाविनोयथास्वमायाकल्पितपदार्थेषु द्वेषप्रीतिराहित्यम् स्वकल्पितत्वेनमिथ्यात्वनिश्चयात् तथाममापिसर्वत्र मिथ्यात्वनिश्चयात् नद्वेषरागाविति नमत्तस्तेभयमिति भावः तथाप्ययंमेस्वभावइत्याह भजतोऽन्विति

सर्वत्रविगतस्नेहामद्भक्त्यामोक्षसेऽचिरात् अहंसर्वत्रसमदृक्द्वेष्योवाप्रियएववा ६५ नास्तिमेकल्प कस्येवभजतोऽनुभजाम्यहम् मन्मायामोहितधियोमामंबमनुजाकृतिम् ६६ सुखदुःखाद्यनुगतं जानंतिनतुतत्वतः दिष्ट्यामद्गोचरंज्ञानमुत्पन्नंतेभवापहम् ६७ स्मरंतीतिष्ठभवनेलिप्यसेनचक र्मभिः इत्युक्त्वासापरिक्रम्यरामंसानंदविस्मया ६८ प्रणम्यशतशोभूमौययौगेहंमुदान्विता भरत स्तुसहामात्यैर्मातृभिर्गुरुणासह ६९ अयोध्यामगमच्छीघ्रंराममेवानुचिंतयन् पौरजानपदान्स र्वानयोध्यायामुदारधीः ७० स्थापयित्वायथान्यायंनंदिग्रामंययौस्वयम् तत्रसिंहासनेनित्यंपादु केस्थाप्यभक्तितः ७१ पूजयित्वायथारामंगंधपुष्पाक्षतादिभिः राजोपचारैरखिलैःप्रत्यहंनियतव्र तः ७२

अतोनवैषम्यनैर्घृण्ये ६५ ६६ ननुतत्वतःअहंतादृशइतिशेषः भवापहमित्यनेनभयांतरस्यावकाशएवनेतिसूचि तम् ६७ मांस्मरंतीतिष्ठ मांजगदीश्वरकत्वेनस्मरंतीतिष्ठ एवंचसर्वस्मिन् स्वतंत्रत्वाभिमानापगमान्नकर्मभिर्लिप्यसे सोभिमानएव कर्मलेपकइतिभावः ६८ ६९ ७० स्थाप्य स्थापयित्वाआर्षोल्यप् ७१ राजोपचारैः राजयोग्यैःपुष्पादिभीराममिवतेपूजयित्वेत्यर्थः ७२

भरतस्यापिरामसमव्रतत्वमाह फलेति दांतोजितेंद्रियः ७३ ७४ ब्रह्ममुनिः ब्रह्मर्षिः ७५ रामः चित्रकूटाद्रौमुनिभिःसीतयाल
क्ष्मणेनावृतोवसन्नपिकिंचित्कालमेवोपावसदित्यन्वयः एवेत्यस्याध्याहारः नबहुकालमित्यर्थः ७६ तत्रहेतुमाह नागराश्चेति



फलमूलाशनोदांतोजटावल्कलधारकः अधःशायीब्रह्मचारीशत्रुघ्नसहितस्तदा ७३ राजकार्या-
णिसर्वाणियावंतिपृथिवीतले तानिपादुकयोःसम्यक्निवेदयतिराघवः ७४ गणयन्दिवसान्येव
रामागमनकांक्षया स्थितोरामार्पितमनाः साक्षाद्ब्रह्ममुनिर्यथा ७५ रामस्तुचित्रकूटाद्रौवसन्मु
निभिरावृतः सीतयालक्ष्मणेनापिकिंचित्कालमुपावसत् ७६ नागराश्चसदायांतिरामदर्शन
लालसाः चित्रकूटस्थितंज्ञात्वासीतयालक्ष्मणेनच ७७ दृष्ट्वातज्जनसंबाधंरामस्तत्याजतंगिरि
म् दंडकारण्यगमनेकार्यमप्यनुचिंतयन् ७८ अन्वगात्सीतयाभ्रात्रात्वत्रेराश्रममुत्तमम् सर्वत्रसु
खसंवासंजनसंबाधवर्जितम् ७९ गत्वामुनिमुपासीनंभासयंतंतपोवनम् दंडवत्प्रणिपत्याहरामोह
मभिवादये ८० पितुराज्ञांपुरस्कृत्यदंडकानहमागतः वनवासमिषेणापिधन्योऽहंदर्शनात्तव ८१

लक्ष्मणेनचेतिसहेतिशेषः ७७ कार्यंरावणवधरूपम् ७८ जनसंबाधवर्जितं नागरजनसंबाधहीनम् ७९ गत्वाअत्र्याश्रममिति
शेषःअत्रिंदंडवत्प्रणम्यरामोऽहमभिवादयेइत्याहेत्यन्वयः ८० प्रसंगादागत्यापित्वद्दर्शनेनाहंधन्यःकिंवक्तव्यंत्वद्दर्शनोद्देशेनैवागतोध
न्यइति ८१

परंहरिमंतर्यामिरूपम् उपासनाभिस्तत्सारूप्यंयेगताः तद्यवच्छेदायपरमिति ८२ लक्ष्मणंचैवेतिहृष्टेतिशेषः वाक्यमब्रवीत् राममितिशेषः ८३
अतीवसंहृष्टा अत्यंतहृष्टतराधर्मवत्सलाधर्मप्रिया ८४ ८५ सीतारामवचनंतथा अवश्यमित्यंगीकृत्य तथाकरोत् तत्समीपगमनमकरोत्
८६ सीतेइतिच्छेदः संधिरार्षः ८७ भक्तिसंयुतासाक्षादीश्वरीयमितिभक्तिमती ८८ नत्यक्ष्यते कदाचिदपीतिशेषः ८९ अथशिक्षयति पातिव्र

श्रुत्वारामस्यवचनंरामंज्ञात्वाहरिंपरम् पूजयामासविधिवद्भक्त्यापरमयामुनिः ८२ वन्यैःफलैःकृतातिथ्यमु
पविष्टंरघूत्तमम् सीताचलक्ष्मणंचैवसंतुष्टोवाक्यमब्रवीत् ८३ भार्यामेऽतीवसंहृष्टाह्यनुसूयेतिविश्रुता तप
श्चरंतीस्थाचिरंधर्मज्ञाधर्मवत्सला ८४ अंतस्तिष्ठतितांसीतापश्यत्वरिनिषूदन तथेतिजानकींप्राहरामोरा-
जीवलोचनः ८५ गच्छदेवींनमस्कृत्यशीघ्रमेहिपुनःशुभे तथेतिरामवचनेनसीताचाऽपितथाकरोत् ८६ दृष्ट्वा
वत्ससीतामत्रिसीतांहस्त्वातिहृष्टधीः अनुसूयासमालिंग्यवत्सेसीतेतिसादरम् ८७ दिव्येददौकुंडलेद्वे निर्मिते
विश्वकर्मणा दुकूलेद्वेददौतस्यैनिर्मलेभक्तिसंयुता ८८ अंगरागंचसीतायैददौदिव्यंशुभानना नत्यक्ष्यतेऽगरा
गेणशोभात्वांकमलानने ८९ पातिव्रत्यंपुरस्कृत्यराममन्वेहिजानकि कुशलीराघवोयातुत्वयासहपुनर्गृहम् ९० भोज
यित्वायथान्यायंरामंसीतासमन्वितम् लक्ष्मणंचतदारामंपुनःप्राहकृतांजलिः ९१ रामत्वमेवभुवनानिविधाय
तेषांसंरक्षणायसुरमानुषतिर्यगादीन् देहान्बिभर्षिनचदेहगुणैर्विलिप्तस्त्वत्तो बिभेत्यखिलमोहकरीचमाया
९२ इतिश्रीम० उमामहे० अयोध्या० नवमः सर्गः ९ अयोध्याकांडेनवसर्गाणांसप्तशतश्लोकाः ७००

त्यमिति अथाशिषमाह
कुशलीति ९० ९१ सुरदेहोवामनादिः मानुषोदेहोरामादिः तिर्यग्देहोमत्स्यादिः नचदेहेतिमायिकत्वादितिभावः त्वत्तोबिभेतीतित्वज्ज्ञाननाश्यत्वा
दितिभावः ९२ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणः० अध्यात्म० अयोध्या० नवमः सर्गः ९

इतिश्रीमदध्यात्मरामायणेअयोध्याकांडःसमाप्तः



# अथश्रीमदध्यात्मरामायणअरण्यकांडंप्रारभ्यते

श्रीगणेशायनमः अथेतिदिनंदिनशेषम् १ यत्रदंडकंविपिनंमुनिमंडलमंडितम् तत्रगच्छामहे त्वमाज्ञातुंकृताज्ञं कर्तुम् २ ३
मार्गद्रष्टामार्गदर्शयिता लोकानुसारिणः लोकवदज्ञत्वंनाटयतः ४ वारितः निवर्तध्वमितिप्रार्थितः ५ ६ ७ ८ रामा



श्रीमहादेवउवाच अथतत्रदिनंस्थित्वाप्रभातेरघुनंदनः स्नात्वामुनिंसमामंत्र्यप्रयाणायोप
चक्रमे १ मुनेगच्छामहेसर्वेमुनिमंडलमंडितम् विपिनंदंडकंयत्रत्वमाज्ञातुमिहार्हसि २ मार्ग
प्रदर्शनार्थायशिष्यानाज्ञप्तुमर्हसि श्रुत्वारामस्यवचनंप्रहस्यात्रिर्महायशाः प्राहतत्ररघुश्रेष्ठरा
मरामसुराश्रय ३ सर्वस्यमार्गद्रष्टात्वंतवकोमार्गदर्शकः तथापिदर्शयिष्यंतितवलोकानुसारिणः
४ इतिशिष्यान्समादिश्यस्वयंकिंचित्तमन्वगात् रामेणवारितःप्रीत्याअत्रिःस्वभवनंययौ ५
क्रोशमात्रंततोगत्वाददर्शमहतींनदीम् अत्रेःशिष्यान्उवाचेदंरामोराजीवलोचनः ६ नद्याःसं
तरणेकश्चिदुपायोविद्यतेनवा ऊचुस्तेविद्यतेनौकासुदृढारघुनंदन ७ तारयिष्यामहेयुष्मान्
वयमेवक्षणादिह ततोनाविसमारोप्यसीताराघवलक्ष्मणौ ८ क्षणात्संतारयामासुर्नदींमुनिकु
मारकाः रामाभिनंदिताःसर्वेजग्मुरत्रेरथाश्रमम् ९ तावेत्यविपिनंघोरंझिल्लीझंकारनादितम् ना
नामृगगणाकीर्णंसिंहव्याघ्रादिभीषणम् १० राक्षसैर्घोररूपैश्चसेवितंरोमहर्षणम् प्रविश्यविपिनंघो
रंरामोलक्ष्मणमब्रवीत् ११ इतःपरंप्रयत्नेनगंतव्यंसहितेनमे धनुर्गुणेनसंयोज्यशरानपिकरेदधत् १२

भिनंदिताः रामेणानंदपूर्वकंगच्छतेतिदत्तानुमतयः ९ झिल्लीझंकारोझिल्लीशब्दः १० ११ सहितेनद्वाभ्यांमिलितेनगं
तव्यमित्युक्तमितिशेषः दधत् आदधदित्यर्थः १२

साहित्यप्रकारमेवाह अग्रइति आत्मपरात्मनोर्जीवेश्वरयोर्मध्यगा आश्रयत्वविषयत्वाभ्यां संबद्धा मायेवेत्यर्थः १३ दृष्टमपश
कुनैः सूचितम् ननु शकुनादिषु कोविश्वासस्तत्राह श्रुतपूर्वमिति दंडकारण्ये पूर्वमृषीणां मुखात् श्रुतं रक्षोभयं विद्यते शकु
नैस्तन्निश्चितमित्यर्थः १४ कल्हारशीतोदकादियुक्ता पुष्करिणी तत्रास्ते १५ साशोभना तैर्व्यदृश्यतेत्यर्थः १६ महासत्वं महा

अग्रेयास्याम्यहं पश्चात्त्वमन्वेहि धनुर्धर आवयोर्मध्यगासीता मायेवात्मपरात्मनोः १३ चक्रश्चार
य सर्वत्र दृष्टं रक्षोभयं महत् विद्यते दंडकारण्ये श्रुतपूर्वमरिंदम १४ इत्येवं भाषमाणौ तौ जग्मतुः
सार्द्धयोजनम् तत्रैका पुष्करिण्यास्ते कल्हारकुमुदोत्पलैः १५ अंबुजैः शीतलोदेन शोभमानाव्य
दृश्यत तत्समीपमतो गत्वा पीत्वा तत्सलिलं शुभम् १६ ऊषुस्ते सलिलाभ्याशे क्षणं छायासुपाश्रि
ताः ततो ददृशुरायांतं महासत्वं भयानकम् १७ करालदंष्ट्रवदनं भीषयंतं स्वगर्जितैः वामांसेन्य
स्तशूलाग्रग्रथितानेकमानुषम् १८ भक्षयंतं गजव्याघ्रमहिषं वनगोचरम् ज्यारोपितं धनुर्धृत्वारा
मो लक्ष्मणमब्रवीत् १९ पश्य भ्रातर्महाकायो राक्षसोऽयमुपागतः आयात्यभिमुखं नोग्रे भीरूणांभ
यमावहन् २०

शरीरं सापिानम् १७ करालदंष्ट्रायुतं वदनं यस्य तं वामांसे वामस्कंधे न्यस्त शूलाग्रे ग्रथिता अने
कमानुषा येन तं १८ गजव्याघ्रमहिषमिति समाहारद्वंद्वः ज्या आरोपिता यस्मिन् तं १९ अग्रे संमुखदेशे वर्तमानोऽस्म
दभिमुखमायाति भीरूणां भयमावहन्नित्यनेन नास्माकं भयमिति ध्वनितम् २० ७ ७

अचलइवरामःस्थितइत्यन्वयः २१ २२ २३ वल्कप्रविष्टकवलोपमावित्यनेनसूकरवधलक्षंध्वनयति व्याघ्रादुष्टाहिंस्रजीवाः



सज्जीकृतधनुस्तिष्ठमाभैर्जनकनंदिनि इत्युक्त्वाबाणमादायस्थितोरामइवाचलः २१ सतुहस्वार- मानार्थंलक्ष्मणंजानकींतदा अट्टहासंततःकृत्वाभीषयन्निदमब्रवीत् २२ कौयुवांबाणतूणीरजटा वल्कलधारिणौ मुनिवेषधरौबालौस्त्रीसहायौसुदुर्मदौ २३ सुंदरौबतमेवल्कप्रविष्टकवलोपमौ किमर्थमागतौघोरंवनंव्यालनिषेवितम् २४ श्रुत्वारक्षोवचोरामःस्मयमानउवाचतम् अहंराम स्त्वयंभ्राताल्क्ष्मणोममसंमतः २५ एषासीताममप्राणवल्लभावयमागताः पितृवाक्यंपुरस्कृत्य शिक्षणार्थंभवादृशाम् २६ श्रुत्वातद्रामवचनमट्टहासमथाकरोत् व्यादायवक्त्रंबाहुभ्यांशूलमा- दायसत्वरः २७ मांनजानासिरामत्वंविराधंलोकविश्रुतम् मद्भयान्मुनयःसर्वेत्यक्त्वावनमितोगताः २८ यदिजीवितुमिच्छास्तित्यक्त्वासीतांनिरायुधौ पलायतंनचेच्छीघ्रंभक्षयामियुवामहम् २९ इत्युक्त्वाराक्षसःसीतामादातुमभिदुद्रुवे रामश्चिच्छेदतद्बाहू शरेणप्रहसन्निव ३० ततःक्रोधप रीतात्माव्यादायविकटंमुखम् राममभ्यद्रवद्रामश्चिच्छेदपरिधावतः ३१ पदद्वयंविराधस्यतदद्भु तमिवाभवत् ३२ ततःसर्पइवास्येनग्रसितुंराममापतत् ततोऽर्द्धचंद्राकारेणबाणेनास्यमहच्छिरः ३३

२४ २५ २६ २७ २८ जीवितुमिच्छास्तियुवयोरितिशेषः शीघ्रंपलायतंनोचेद्भक्षयामीत्यन्वयः २९ ३० ३१ ३२ सर्पइवेतिउरसैवेतिभावः ३३

रुधिरौघेणसहतच्छिरोभूतलेपपातेत्यन्वयः ३४ ३५ विराधकायान्निःसृतइतिशेषः विमलांबरंनिर्मलवस्त्रंतेनावृतः चामी
करंसुवर्णम् ३६ भवप्रवाहस्यसंसारप्रवाहस्योपरमोनाशोयस्मात्तम् घृणायाः दयायाः आकरमुत्पत्तिस्थानम् प्रपन्नानांशरणा
गतानांसर्वपीडानाशकम् ३७ राजीवंकमलम् अकारणकोपमूर्तिनानिर्निमित्तकोप मूर्तिना ३८ मेकर्णपुटं त्वदीयंकथामृ

तच्छेदरुधिरौघेणपपातधरणीतले ततःसीतासमालिंग्यप्रशशंसरघूत्तमम् ३४ ततोदुंदुभयोनेदुर्दिवि
देवगणेरिताः ननृतुश्चाप्सरोहृष्टाजगुर्गंधर्वकिन्नराः ३५ विराधकायादतिसुंदराकृतिर्विभ्राजमा
नोविमलांबरावृतः प्रतप्तचामीकरचारुभूषणो व्यदृश्यताग्रेगगनेरविर्यथा ३६ प्रणम्यरामंप्रण
तार्तिहारिणंभवप्रवाहोपरमंघृणाकरम् प्रणाम्यभूयःप्रणनामदंडवत्प्रपन्नसर्वार्तिहरंप्रसन्नधीः
३७ विराधउवाच श्रीरामराजीवदलायताक्षविद्याधरोऽहंविमलप्रकाशः दुर्वाससाकारणकोप
मूर्तिनाशप्तःपुरासोद्यविमोचितस्त्वया ३८ इतःपरंत्वच्चरणारविंदयोःस्मृतिःसदामेऽस्तुभवोपशांतये
त्वन्नामसंकीर्तनमेववाणीकरोतुमेकर्णपुटंत्वदीयम् ३९ कथामृतंपातुकरद्वयंतेपादारविंदार्चनमेवकुर्या
त् शिरश्चतेपादयुगप्रणामंकरोतुनित्यंभवदीयमेव ४० नमस्तुभ्यंभगवतेविशुद्धज्ञानमूर्तये आत्मा
रामायरामायसीतारामायवेधसे ४१ प्रपन्नंपाहिमांरामयास्यामित्वदनुज्ञया देवलोकंरघुश्रेष्ठमा
यामांमावृणोतुते ४२ इतिविज्ञापितस्तेनप्रसन्नोरघुनंदनः ददौवरंतदाप्रीतोविराधायमहामतिः ४३

तंपात्वित्यन्वयः पिबत्वित्यर्थः सादरंशृणोत्वित्यर्थः पिबादेशाभावआर्षः ३९ एवंमदंगजातंसर्वंभवदीयमेवास्तु भवत्सेवाप
रमेवास्त्वित्यर्थः ४० आत्मनिस्वस्वरूपे आरमतेतस्मै सर्वदातदनुसंधानवतेइत्यर्थः ४१ इदानींप्रार्थयते मायेत्यादि ४२ ४३

अशेषमायादोषरूपा लोके गुणास्तत्वेन लोके प्रसिद्धास्त्वयामद्दर्शनाज्जिताः अथ त्वं ज्ञानवतां वरो भूत्वा मुक्तो भविष्यसीति शेषः ४४ परं मोक्षं याहि प्राप्नुहि ४५ रामेण रक्षोनिधनं कृतं तेन निधनेन तस्य रक्षसः शापाद्विमुक्तिः कृता तस्यैकं वरदानं च कृतं यतस्तेन पुनरेव विद्याधरत्वं लब्धं अतो रामं गृणन्नरोऽखिलार्थानेति प्राप्नोति ४६ इति श्रीमदध्यात्मरामायणे श्रीरामवर्मकृतौ अरण्य-



गच्छ विद्याधराशेषमायादोषगुणाञ्जिताः त्वयामद्दर्शनात्सद्यो मुक्तो ज्ञानवतां वरः ४४ मद्भक्तिर्दुर्लभा लोके जाता चेन्मुक्तिदा यतः अतस्त्वं भक्तिसंपन्नः परं याहि ममाज्ञया ४५ रामेण रक्षोनिधनं सुघोरं शापाद्विमुक्तिर्वरदानमेवम् विद्याधरत्वं पुनरेव लब्धं रामं गृणन्नेति नरोऽखिलार्थान् ४६ इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकांडे प्रथमः सर्गः १ श्रीमहादेव उवाच विराधे स्वर्गते रामो लक्ष्मणेन च सीतया जगाम शरभंगस्य वनं सर्वसुखावहम् १ शरभंगस्ततो दृष्ट्वा रामं सौमित्रिणा सह आयांतं सीतया सार्द्धं संभ्रमादुत्थितः सुधीः २ अभिगम्य सुसंपूज्य विष्टरेषूपवेशयत् आतिथ्यमकरोत्तेषां कंदमूलफलादिभिः ३ प्रीत्याह शरभंगोऽपि रामं भक्तपरायणम् बहुकालमिहैवासं तपसे कृतनिश्चयः ४ तव संदर्शनाकांक्षी राम त्वं परमेश्वरः अद्य मत्तपसा सिद्धं यत्पुण्यं बहु विद्यते तत्सर्वं तव दास्यामि ततो मुक्तिं व्रजाम्यहम् ५

कांडे प्रथमः सर्गः १ विराधे इति १ आयांतमागतम् २ अभिगम्य सुस्वागमनपूर्वकं तमानीय उपवेशयत् अडभाव आर्षः ३ आसं स्थितः तपसे तपः कर्तुं कृतनिश्चयः ४ तव संदर्शनाकांक्षी इहैवासमिति पूर्वेणान्वयः यतस्त्वं परमेश्वरः मोक्षदः ५

विरक्तः सन् शोभनंपुण्यंहिंसारहितत्वात्तपस्तत्फलंरामस्यसमर्प्यदत्वासहसातत्क्षणमेवचितिंसमारोहयत् समारुहत् निवृत्तभेष
णानिच ६ अशेषहृत्स्थंसर्वांतर्यामिणंसहलक्ष्मणंसमस्तत्वेऽपिचोपसर्जनस्येतिसादेशाभावः ७ स्मृतकामधेनुः स्मृतः सन् का

समर्प्यरामस्यमहत्स्वपुण्यफलंविरक्तः शरभंगयोगी चितिंसमारोहयदप्रमेयंरामंससीतंसहसाप्रण
म्य ६ ध्यायंश्चिरंराममशेषहृत्स्थं दूर्वादलश्यामलमंबुजाक्षम् चीरांबरंस्निग्धजटाकलापंसीता
सहायंसहलक्ष्मणंतम् ७ कोवांदयालुः स्मृतकामधेनुरन्योजगत्यांरघुनायकादहो स्मृतोमया
नित्यमनन्यभाजाज्ञात्वास्मृतिंमेस्वयमेवयातः ८ पश्यामिदानींदेवेशोरामोदाशरथिः प्रभुः दग्ध्वास्व
देहंगच्छामिब्रह्मलोकमकल्मषः ९ अयोध्याधिपतिर्मेस्तुहृदयेराघवः सदा यद्वामांकेस्थितासी
तामेघस्येवतडिल्लता १० इतिरामंचिरंध्यात्वादृष्ट्वाचपुरतः स्थितम् प्रज्वाल्यसहसावन्हिंदग्ध्वाप
चात्मकंवपुः ११ दिव्यदेहधरः साक्षाद्ययौलोकपतेः पदम् ततोमुनिगणाः सर्वेदंडकारण्यवासिनः
आजग्मूराघवंद्रष्टुंशरभंगनिवेशनम् १२ दृष्ट्वामुनिसमूहंतजानकीरामलक्ष्मणाः प्रणेमुः सहसाभूमौ
मायामानुषरूपिणः १३ आशीर्भिरभिनंद्याथरामंसर्वहृदिस्थितम् ऊचुः प्रांजलयः सर्वेधनुर्बाणधरंह
रिम् १४

मधेनुः कल्पतुल्यः सर्वमनोरथपूरकत्वात् यातः आगतः ८ ब्रह्मलोकंउपासकत्वात् मोक्षद्वारभूतम् ९
१० पुरतः स्थितंदृष्ट्वा तादृशमेवहृदयेध्यात्वाच ११ लोकपतेः कार्यब्रह्मणः हिरण्यगर्भस्य शरभंगनिवेशनं तदाश्रम
माजग्मुरित्यन्वयः १२ भूमौदंडवत्पतिताः प्रणेमुः १३ १४ ७ ७ ७

लक्ष्मणं शेषांशमित्यन्वयः १५ अतः भूमिदुःखहरणार्थमवतीर्णत्वात् आदौ खरादिवधेनास्मद्दुःखं मोक्तुमर्हसि १६ सुमि-
त्रासुतजानकीभ्यां सह वनानि द्रष्टुमागच्छ तदा तद्दर्शने सति १७ १८ अस्थिभूतानि आतिशरूक्षाणि १९ २० समाधितः समा-



भूमेर्भारावताराय जातोऽसि ब्रह्मणार्थितः जानीमस्त्वां हरिं लक्ष्मीं जानकीं लक्ष्मणं तथा १५ शेषां-
शं शंखचक्रे हे भरतं सानुजं तथा अतस्त्वादौ ऋषीणां त्वं दुःखं मोक्तुमिहार्हसि १६ आगच्छ यामो मु-
निसेवितानि वनानि सर्वाणि रघूत्तम क्रमात् द्रष्टुं सुमित्रासुतजानकीभ्यां तदा दयास्मासु दृढा भ-
विष्यति १७ इति विज्ञापितो रामः कृतांजलिपुटैर्विभुः जगाम मुनिभिः सार्द्धं द्रष्टुं मुनिवनानि सः १८
ददर्श तत्र पतितान्यनेकानि शिरांसि सः अस्थिभूतानि सर्वत्र रामो वचनमब्रवीत् १९ अस्थीनि केषामे-
तानि किमर्थं पतितानि वै तमूचुर्मुनयो राम ऋषीणां मस्तकानि हि २० राक्षसैर्भक्षितानीश प्रमत्तानां स-
माधितः अंतरायं मुनीनां ते पश्यंतोऽनुचरंति हि २१ श्रुत्वा वाक्यं मुनीनां स भयदैन्यसमन्वितम् प्रतिज्ञामक-
रोद्रामो वधायाशेषरक्षसाम् २२ पूज्यमानः सदा तत्र मुनिभिर्वनवासिभिः जानक्या सहितो रामो लक्ष्मणे-
न समन्वितः २३ उवास कतिचित्तत्र वर्षाणि रघुनंदनः एवं क्रमेण संपश्यन् ऋषीणामाश्रमान्विभुः २४ सुती-
क्ष्णस्याश्रमं प्रागात्प्रख्यातमृषिसंकुलम् सर्वर्तुगुणसंपन्नं सर्वकालसुखावहम् २५

धिना प्रमत्तानां तद्दर्शने पला-
यनाद्यसमर्थानां अंतरायं समाधिरूपमपायत्वमिति पाठे समाधितः प्रमत्तानां हीनानां त्यक्तसमाधीनामित्यर्थः अपायत्वं समाधि-
त्यागरूपं समाधौ हि भगवदेकरूपत्वाद्रक्षांसि नास्कंदंतीति भावः २१ २२ २३ २४ सर्वैर्ऋतुगुणैः संपन्नत्वादेव सर्वकाले सुखजनकम्
२५

भक्त्याप्रेम्णाउत्कंठितेरामस्यपुनःपुनर्दर्शनेच्छावतीलोचनेयस्यसः २५ हेऽभिरामपरमसुंदररामत्वन्मंत्रजापीअहंसततंतवदा-
सदासोभूयामितिशेषः अप्रमेयदेशकालापरिच्छेद्यशिवब्रह्मसमाश्रितचरणसंसारसमुद्रतरणेऽमलपोतरूपौपादौयस्य त्वच्च
रणाश्रितानांसंसारसागरोत्तरणमकिंचित्करमेवेतिभावः २७ सर्वजगतामगोचरोऽपित्वंमलभूतोयःमुद्गलपिंडःशरीरंतत्रयोमो
हःअहंगौरइत्याद्यहंताबुद्धिस्तद्रूपपाशेनानुबद्धंचित्तंयस्यतंमांअद्यत्वन्माययाकृतकलत्रगृहरूपेंऽधकूपेनिमग्नंनिरीक्ष्यत्व

राममागतमाकर्ण्यसुतीक्ष्णःस्वयमागतः अगस्तिशिष्योरामस्यमंत्रोपासनतत्परः विधिवत्पूजयामा
सभक्त्युत्कंठितलोचनः २५ सुतीक्ष्णउवाच त्वन्मंत्रजाप्यहमनंतगुणाप्रमेयसीतापतेशि
वविरिंचिसमाश्रितांघ्रे संसारसिंधुतरणामलपोतपाद रामाभिरामसततंतवदासदासः २७ मामं
द्यसर्वजगतामविगोचरस्त्वंत्वन्माययासुतकलत्रगृहांधकूपे मग्नंनिरीक्ष्यमलमुद्गलपिंडमोहपाशा
नुबद्धहृदयंस्वयमागतोऽसि २८ त्वंसर्वभूतहृदयेषुकृतालयोऽपित्वन्मंत्रजाप्यविमुखेषुतनोषिमायाम्
त्वन्मंत्रसाधनपरेष्वपयातिमायासेवानुरूपफलदोऽसियथामहीपः २९ विश्वस्यसृष्टिलयसंस्थितिहेतु
रेकस्त्वन्माययात्रिगुणयाविधिरीशविष्णू भासीशमोहितधियांविविधाकृतिस्त्वंयद्वद्रविःसलिलपा
त्रगतोह्यनेकः ३०

यमागतोऽसीत्याश्चर्यंतेनकरुणावत्त्वमित्याशयः २८ जाप्यंजपस्तद्विमुखेषुयथामहीपोराजासेवानुरूपफलद
स्तथात्वमसीत्यर्थः २९ विश्वसृष्ट्यादिहेतुस्त्वमेकएव त्रिगुणयामाययोपाधिभूतयात्वमेवविधिरितिईशःशिवइतिविष्णुरितिभासी
त्यन्वयः विविधाकृतित्वंतत्तद्ध्यानादौप्रसिद्धमेवतेषांतथात्वम् तच्चेदमनेकत्वंतवमिथ्यैवेत्याह यद्वदिति ३०

तमसः परतः तद्धीनेशब्दस्तत्त्वप्रधानचित्ते स्थितस्येत्यर्थः दृग्रूपतः दृग्रूपस्यदृष्टेरित्यर्थः सार्वविभक्तिकस्तसिः प्रसन्नःदृ-
ग्विषयः भवसीतिशेषः ३१ अरूपिणः अरूपस्यापि छांदसङ्इतिमायाविडंबनेनमायाव्यवहारेणकृतम् स्पष्टमन्यत् ३२नियत
तसेवितेतिनियमेनसेवितेत्यर्थः मद्भागधेयंमदृष्टारब्धशरीरमितियावत् अनेनशरीराणांपरादृष्टमात्रजन्यत्वंसूचितम्

प्रत्यक्षतोद्यभवत श्चरणारविंदंपश्यामिराम तमसः परतः स्थितस्य दृग्रूपतस्त्वमसतामविगोच-
रोऽपित्वन्मंत्रपूतहृदयेषुसदाप्रसन्नः ३१ पश्यामिराम तवरूपमरूपिणोऽपिमायाविडंबनकृतंसुमनु
ष्यवेषम् कंदर्पकोटिसुभगंकमनीयचापबाणंदयार्द्रहृदयंस्मितचारुवक्त्रम् ३२ सीतासमेतमजिनांब
रमप्रधृष्यंसौमित्रिणानियतसेवितपादपद्मम् नीलोत्पलद्युतिमनंतगुणंप्रशांतंमद्भागधेयमनिशंप्रण
मामिरामम् ३३ जानंतुरामतवरूपमशेषदेशकालाद्युपाधिरहितंघनचित्प्रकाशम् प्रत्यक्षतोद्यममगोच
रमेतदेवरूपंविभातुहृदयेनपरंविकांक्षे ३४ इत्येवंस्तुवतस्तस्यरामः सस्मितमब्रवीत् मुनेजानामितेचि
त्तंनिर्मलंमदुपासनात् ३५ अतोऽहमागतोद्रष्टुंमदृतेनान्यसाधनम् मन्मंत्रोपासकालोकेमामेवशरणंगताः
३६ निरपेक्षानान्यगतास्तेषांदृश्योऽहमन्वहम् स्तोत्रमेतत्पठेद्यस्तुत्वत्कृतंमत्प्रियंसदा ३७

३३ जानंतु अन्येऽपियोगिनइतिशेषः देशेत्यादि देशकालाद्यपरिच्छिन्नमित्यर्थः घनेतिचैतन्यमात्ररूपमित्यर्थः प्रत्यक्षतइतिम
मतुपरिदृश्यमानेऽप्येवमीति नतुपरेवाङ्मनसागोचरेइत्यर्थः ३४ ३५ मदृतेमद्भक्तिंविनेत्यर्थः तलोपश्छांदसः तदेवाह मन्मंत्रेत्यादिना३६
३७

तस्यमेमयिसद्भक्तिः सतीभक्तिर्भवेत् ३८ ३९ चिराहृष्टोमयापीतिशेषः ४० आगस्त्यसंभाषणेलोलमत्युत्कंटेच्छावन्मान
संयस्यसइत्यर्थः ४१ इतिश्रीमत्सकल० अरण्यकांडेद्वितीयःसर्गः २ अथेति अगस्त्यानुजोऽग्निजिव्हनामाक

सद्भक्तिर्मेभवेत्तस्यज्ञानंचविमलंभवेत् त्वंममोपासनादेवविमुक्तोऽसीहसर्वतः ३८ देहांतेममसा
युज्यंलप्स्यसेनात्रसंशयः गुरुंतेद्रष्टुमिच्छामिह्यगस्त्यंमुनिनायकम् किंचित्कालंतत्रवस्तुमनो
मेत्वरयत्यलम् ३९ सुतीक्ष्णोऽपितथेत्याह श्वोगमिष्यसिराघव अहमप्यागमिष्यामिचिराहृष्टोम
हामुनिः ४० अथप्रभातेमुनिनासमेतोरामःससीतःसहलक्ष्मणेन आगस्त्यसंभाषणलोलमान
सःशनैरगस्त्यानुजमंदिरंययौ ४१ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअरण्यकांडेद्वि
तीयःसर्गः २ श्रीमहादेवउवाच अथरामःसुतीक्ष्णेनजानक्यालक्ष्मणेनच अगस्त्यस्यानुज
स्याशुमध्याह्नेसमपद्यत १ तेनसंपूजितःसम्यक्भुक्त्वामूलफलादिकम् परेद्युःप्रातरुत्थायजग्मुस्तेग
स्त्यमंडलम् २ सर्वर्तुफलपुष्पाढ्यंनानामृगगणैर्युतम् पक्षिसंघैश्चविविधैर्नादितंनंदनोपमम् ३ ब
ह्मर्षिभिर्देवर्षिभिःसेवितंमुनिमंदिरैः सर्वतोऽलंकृतंसाक्षाद्ब्रह्मलोकमिवापरम् ४ बहिरेवाश्रमस्याथ
स्थित्वारामोऽब्रवीन्मुनिम् सुतीक्ष्णगच्छत्वंशीघ्रमागतंमांनिवेदय ५ अगस्त्यमुनिवर्यायसीतयाल-
क्ष्मणेनच महाप्रसादइत्युक्त्वासुतीक्ष्णःप्रययौगुरोः ६

टि: १ अगस्त्यमंडलंतदाश्रमम् २ ३ देवर्षिभिरि
ति छंदोभंगआर्षः मुनिमंदिरैः सर्वतोऽलंकृतमित्यन्वयः ४ ५ ६ [illegible]

७ व्याख्यातोराममंत्रार्थोयेनतम् भयथौमुनेः समीपमितिशेषः ८ ९ कांक्षमाणः तमेवेत्यनुकर्षः १० ११ १२ सीतयेत्यादेः सहेति



आश्रमांतरयातत्रऋषिसंघसमावृतम् उपविष्टंरामभक्तैर्विशेषेणसमायुतम् ७ व्याख्यातराममंत्रार्थंशिष्येभ्यश्चातिभक्तितः दृष्ट्वागस्त्यमुनिश्रेष्ठंसुतीक्ष्णःप्रययौमुनेः ८ दंडवत्प्रणिपत्याहविनयावनतः सुधीः रामोदाशरथिर्ब्रह्मन्सीतयालक्ष्मणेनच ९ आगतोदर्शनार्थंतेबहिस्तिष्ठतिसांजलिः अगस्त्यउवाच शीघ्रमानयभद्रंतेराममममहृदिस्थितम् तमेवध्यायमानोऽहंकांक्षमाणोऽत्रसंस्थितः १० इत्युक्त्वास्वयमुत्थायमुनिभिःसहितोद्रुतम् अभ्ययात्परयाभक्त्यागत्वाराममथाब्रवीत् ११ आगच्छराममभद्रंतेदिष्ट्यातेऽद्यसमागमः प्रियातिथिर्ममप्राप्तोस्यद्यमेसफलंदिनम् १२ रामोऽपिमुनिमायांतंदृष्ट्वाहर्षसमाकुलः सीतयालक्ष्मणेनापिदंडवत्पतितोभुवि १३ द्रुतमुत्थाप्यमुनिराट्राममालिंग्यभक्तितः तद्गात्रस्पर्शजाल्हादस्रवन्नेत्रजलाकुलः १४ गृहीत्वाकरमेकेनकरेणरघुनंदनम् जगामस्वाश्रमंहृष्टोमनसामुनिपुंगवः १५ सुखोपविष्टंसंपूज्यपूजयाबहुविस्तरम् भोजयित्वायथान्यायंभोज्यैर्वन्यैरनेकधा १६ सुखोपविष्टमेकांतेरामंशशिनिभाननम् कृतांजलिरुवाचेदमगस्त्योभगवानृषिः १७ त्वदागमनमेवाहंप्रतीक्षन्समवस्थितः यदाक्षीरसमुद्रांतेब्रह्मणाप्रार्थितःपुरा १८ भूमेर्भारापनुत्त्यर्थंरावणस्यवधायच तदादिदर्शनाकांक्षीतवरामतपश्चरन् वसामिमुनिभिःसार्द्धंत्वामेवपरिचिंतयन् १९

शेषः १३ तद्गात्रस्पर्शजाल्हादेन स्रवद्यन्नेत्रजलंतेनाकुलः १४ रघुनंदनंरघुनंदनस्येत्यर्थः १५ वन्यैर्भोज्यैर्भोजयित्वेत्सन्वयः १६ १७ १८ हेरामतवदर्शनाकांक्षीतपश्चरन् तदादितत्कालमारभ्यवसामीत्यन्वयः १९ ७ ७

अथभगवत्स्वरूपंशिष्यान्बोधयितुमन्यथात्वशंकावारणायभगवदग्रेएवाह सृष्टेःप्रागिति त्वमेकएवासीः निर्विकल्पःविक
ल्परूपसकलप्रपंचहीनः तत्रहेतुः अनुपाधिकइति उपाध्यसंबद्धइत्यर्थः ननुकिंसर्वथोपाधिर्नास्त्येवेतिनेत्याह त्वदिति अस्त्येव
सा परंतुस्वकल्पितत्वसंबंधहीनासा अतस्त्वमनुपाधिकइत्याशयः १९ अथसृष्टिमुपक्रमते त्वामिति त्वांनिर्गुणमेवसंतं यदासाश
क्तिः स्वकल्पितसंबंधेनत्वामावृणोति त्वत्संबंधामात्मानंमनुते नतुकदाचिदपित्वंतत्संबंधमात्मानंमनुषे ततोनिर्गुणमेवेत्युक्तम् त
दातांमायामव्याकृतमित्याहुः २० तस्यतदवस्थायांनामांतराण्यप्याह मूलप्रकृतिरित्यादि नहुक्तंकपिलेनमूलप्रकृतिरविकृतिरित्या

सृष्टेःप्रागेकएवासीर्निर्विकल्पोऽनुपाधिकः त्वदाश्रयात्वद्विषयामायातेशक्तिरुच्यते १९ त्वामेवनिर्गु
णंशक्तिरावृणोतियदातदा अव्याकृतमितिप्राहुर्वेदांतपरिनिष्ठिताः २० मूलप्रकृतिरित्येकेप्राहुर्मायेतिके
चन अविद्यासंसृतिर्बंधइत्यादिबहुधोच्यते २१ त्वयासंक्षोभ्यमाणासामहत्तत्वंप्रसूयते महत्तत्वादहंका
रस्त्वयासंचोदितादभूत् २२

दिना २१ सात्वत्संबंधमात्मानंमन्वाना अतएवत्वयासंक्षोभ्यमाणा संक्षोभश्चात्रत्वत्कल्पितसंबंध
एवेतिबोध्यम् महत्तत्वमिति सविकारात्प्रधानात्तुमहत्तत्वमजायत महानितियतःख्यातिर्लोकानांजायतेसदेतिस्मृतेः निश्चयोस्या
मितिसाधारणीवृत्तिः एतदभिमानिनिहिरण्यगर्भेऽपिमहानितिशब्दः सर्वेषांस्वस्वबुद्धिरूपाःप्रतिनियतोपाधयश्चास्यैवमह
त्तत्वस्यांशाः अस्यानेकबुद्धिमंडलरूपत्वादितिबोध्यम् त्वयासंचोदितात्प्रेरितान्महत्तत्वादहंकारोऽभूत् सचाहंममेत्य
भिमानवृत्तिकमंतःकरणद्रव्यम् अहंकारोऽभिमानश्चकर्तामंताचसस्मृतइतिकौर्मोक्तेः अभिमानोऽभिमानवृत्तिकइत्यर्थः
॥२२॥

महत्तत्वसंवृतस्तदुपादानकत्वात् यथाघटोमृदा सत्वाद्युपाधिकत्वेनत्रैविध्यम् मूलप्रकृतेस्त्रिगुणत्वेन तत्कार्यत्वान्महत्तत्वस्य त्रिगुणत्वम् सात्विकोराजसश्चैवतामसश्चत्रिधामहानितिस्मृतेः तत्कार्यत्वाच्चाहंकारस्यत्रैविध्यम् एवमग्रेऽपिबोध्यम् २३ सूक्ष्मतन्मात्राणि शब्दस्पर्शरूपरसगंधतन्मात्राणि अतःसूक्ष्मतन्मात्रेभ्यःस्थूलानिभूतानि तत्रशब्दतन्मात्रादाकाशं स्पर्शतन्मात्रात्पूर्वसहितांद्वायुः ताभ्यांसहिताद्रूपतन्मात्रात्तेजः तैःसहिताद्रसतन्मात्राज्जलं एतैः सहिताद्गंधतन्मात्रात्पृथिवीत्याद्यस्मदुरुकृतसांख्यतंत्रवृत्तौविस्तरः तदेवाह क्रमोत्तरगुणानीतिक्रमेणाधिकगुणानि आकाशंशब्दमात्रगुणंवायुः शब्दस्पर्शगुणः तेजः शब्दस्पर्शरूपगुणंजलं शब्दस्पर्शरूपरसगुणंभूः शब्दस्पर्शरूपरसगंधगुणेति २४ राजसादहंकारादिंद्रियाणिराजसा

> अहंकारोमहत्तत्वसंवृतस्त्रिगुणोऽभवत् सात्विकोराजसश्चैवतामसश्चेतिभण्यते २३ तामसात्सूक्ष्मतन्मात्राण्यासन्भूतान्यतःपरम् स्थूलानिक्रमशोरामक्रमोत्तरगुणानिह २४ राजसानींद्रियाण्येवसात्विकादेवतामनः तेभ्योऽभवत्सूत्ररूपंलिंगंसर्वगतंमहत् २५

हंकारोपादानकारणानीत्यर्थः तानिच वाक्पाणिपादपायूपस्थरूपाणि कर्मेंद्रियाणिपंच चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानिज्ञानेंद्रियाणिपंचेत्येवंदशवचनादानविहरणानंदोत्सर्गाश्चकर्मेंद्रियाणांवृत्तयः ज्ञानेंद्रियाणांचसविकल्पकनिर्विकल्पकोभयरूपज्ञानरूपावृत्तिः तत्रनिर्विकल्पकंकिंचिदिदमितिज्ञानं देवतामनश्चसात्विकाः सात्विकाहंकारोपादानाइत्यर्थः देवताइंद्रियदेवताः ताश्च चक्षुषोरविः श्रोत्रस्यदिक् त्वचोवायुः रसनस्यवरुणः घ्राणस्यांश्विनौ वाचोऽग्निः पाण्योरिंद्रः पादयोरुपेंद्रः पायोर्मित्रः उपस्थस्यकोब्रह्मेति मनइंद्रियमपि अवांतरत्वात् पृथगुक्तम् सूत्ररूपंप्राणादिक्रियाशक्तेः प्राणादेरेवसूत्रव्यवहारात् तदात्मकंहिरण्यगर्भरूपंलिंगंसर्वकार्यकर्तृत्वात् सर्वसूक्ष्मसमष्टिरूपमभवदित्यर्थः २५ ७

ततोविराट्स्थूलसमष्टिरयम् तदाह स्थूलाद्भूतकदंबकादिति इदमिंद्रियादेरप्युपलक्षणम् तस्मादेवविराजःपुरुषात्सर्वं स्थावरंजंगमंअभिव्यक्तमित्यर्थः २६ तत्रजंगममाह देवेत्यादि कालकर्मक्रमेण कालक्रमेणयथाहेमंतेव्रीहयो वसंतेयवादिकर्मक्रमेणकालसहकृतेनातिर्यङ्मनुष्यदेवत्वप्राप्तिः उपाधिभेदेन ब्रह्मादिरूपोऽपित्वमेवेत्याह रजोगुणतः तद्रूपोपाधेःजगतःसर्वकारणंसर्वस्यजगतःकारणमित्यर्थः आर्षत्वात्समासः २७ अस्यलयेनाशनिमित्तंत्वमेवरुद्रस्तमोपाधिकेइत्यर्थः एवंत्वन्मायया

ततोविराट्समुत्पन्नःस्थूलाद्भूतकदंबकात् विराजःपुरुषात्सर्वंजगत्स्थावरजंगमम् २६ देवतिर्यङ्मनुष्याश्चकालकर्मक्रमेणतु त्वंरजोगुणतोब्रह्माजगतःसर्वकारणम् २७ सत्वाद्विष्णुस्त्वमेवास्यपालकःसद्भिरुच्यते लयेरुद्रस्त्वमेवास्यत्वन्मायागुणभेदतः २८ जाग्रत्स्वप्नसुषुप्त्याख्यावृत्तयोबुद्धिजैर्गुणैः तासांविलक्षणोरामत्वंसाक्षीचिन्मयोऽव्ययः २९ सृष्टिलीलांयदाकर्तुमीहसेरघुनंदन अंगीकरोषिमायांत्वंतदावैगुणवानिव ३० राममायाद्विधाभातिविद्याविद्येतितेसदा प्रवृत्तिमार्गनिरताअविद्यावशवर्तिनः निवृत्तिमार्गनिरतावेदांतार्थविचारकाः ३१

गुणभेदैः सत्वरजस्तमोभिरेवतत्तत्प्राधान्येनबुद्धेर्जाग्रदादयोवृत्तयइत्यर्थः त्वंत्वेतदवस्थात्रयरहितइत्याह तासामिति स्वप्नसुषुप्त्योरभावात्तत्प्रतिद्वंद्विजाग्रदवस्थायाअप्यभावइतिभावः २८ २९ सृष्टिलीलामित्युपलक्षणंस्थित्यादेरपि यदाईहसे इच्छसि तदामायामंगीकरोषि तत्कल्पितंतत्कृतसंबंधंमन्यसे तदावस्तुतोऽगुणोऽपिगुणवानिवाभासीतिशेषः ३० तवमायैवसंसारस्यमोक्षस्यचदानेसमर्थेत्याह रामेति विद्यातत्वज्ञानम् अविद्यासंसारस्थूलकारणम् तदुक्तंमार्कंडेयेन साविद्यापरमामुक्तेर्हेतुभूतासनातनी संसारबंधहेतुश्चसैवसर्वेश्वरेश्वरीति ३१

विद्यामयाः तत्त्वज्ञानप्रधानाः संतोऽपि प्रारब्धकर्मणो विक्षेपेण पुनः पुनस्तदनुसंधानवंत इत्यर्थः ३२ विद्याप्राप्तावसाधारणं हेतुमाह लोकइति ३३ मुक्ताएवतेषांतत्त्वज्ञानस्यावश्यंभावित्वादितिभावः व्यतिरेकमप्याह त्वद्भक्तीति ३४ भक्तिरेवकथमितिचेत्तस्याअपि किंचिद्दुसंकारणमस्तीत्याह किंरामेति तंइत्यस्याग्रतइतिशेषः स्वशिष्यविश्वासार्थंभवदग्रतएतदुक्तिः ३५ साधुस्वरूपज्ञानेएवतत्संगतिः शक्येत्यतस्तल्लक्षणमाह साधवइति समचित्ताः शत्रुमित्रयोरागद्वेषहीनचित्ताः अतएवनिस्पृहाः रागद्वेषकार

त्वद्भक्तिनिरतायेचतेवैविद्यामयाःस्मृताः अविद्यावशगायेतुनित्यंसंसारिणस्तुते विद्याभ्यासरतायेतुनित्यंमुक्तास्तएवहि ३२ लोकेत्वद्भक्तिनिरतास्त्वन्मंत्रोपासकास्तुये विद्याप्रादुर्भवेत्तेषांनेतरेषांकदाचन ३३ अतस्त्वद्भक्तिसंपन्नामुक्ताएवनसंशयः त्वद्भक्त्यमृतहीनानांमोक्षः स्वप्नेऽपिनोभवेत् ३४ किंरामबहुनोक्तेनसारंकिंचिद्ब्रवीमिते साधुसंगतिरेवात्रमोक्षहेतुरुदाहृता ३५ साधवः समचित्तायेनिस्पृहाविगतैषिणः दांताःप्रशांतास्त्वद्भक्तानिवृत्ताखिलकामनाः ३६ इष्टप्राप्तिविपत्त्योश्चसमाःसंगविवर्जिताः संन्यस्ताखिलकर्माणःसर्वदाब्रह्मतत्पराः ३७ यमादिगुणसंपन्नाःसंतुष्टायेनकेनचित् सत्संगमोभवेद्यर्हि त्वत्कथाश्रवणेरतिः ३८

णीभूतस्पृहाहीनाः विगतैषिणः त्यक्तपुत्रवित्तादीच्छाः दांताबहिरिंद्रियनिग्रहवंतः शांताअंतरिंद्रियांतःकरणनिग्रहवंतः विगतैषिणइत्यस्यैवव्याख्यानंनिवृत्ताखिलकामनाइति ३६ इष्टेति समाःहर्षविषादरहिताः संगवर्जिताःदुःसंगरहिताः सन्यस्तेत्यादित्यक्तकाम्यनित्यसकलकर्माणः तदेवाह सर्वदाब्रह्मतत्पराः ३७ यमादयोयमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयोयोगशास्त्रोक्ताः यर्हियदातेषांसत्संगमोभवेत्तदात्वत्कथाश्रवणेरतिः समुदेतीत्यन्वयः ३८ ५

ततोभक्तिरवश्यंममभूयात् लब्धाच्चमानश्यत्वित्याकारश्चित्तवृत्तिविशेषः प्रेमाख्यस्तथाप्रेमवतस्त्वज्ज्ञानंस्फुटमेवोदेतिइत्य-
न्वयः ३९ अयमाद्योमुख्यश्चतुरैः कुशलैः सेवितोमुक्तेर्मार्गः तस्मात् हेराघव त्वयिप्रेमलक्षणासद्भक्तिर्मेसदाभूयात् ४० हेहरेत्व

समुदेतिततोभक्तिस्त्वयिरामसनातने त्वद्भक्तावुपपन्नायांविज्ञानंविपुलंस्फुटम् ३९ उदेतिमुक्तिमा
र्गोयमाद्यश्चतुरसेवितः तस्माद्राघवसद्भक्तिस्त्वयिमेप्रेमलक्षणा ४० सदाभूयाद्धरेसंगस्त्वद्भक्ते
षुविशेषतः अद्यमेसफलंजन्मभवत्संदर्शनादभूत् ४१ अद्यमेक्रतवः सर्वेबभूवुः सफलाःप्रभो
दीर्घकालमयातप्तमनन्यमतिनातपः तस्येहतपसोरामफलंतवयदर्चनम् ४२ सदा मेसीतयासा-
र्धंहृदयेवसराघव गच्छतस्तिष्ठतोवापिस्मृतिःस्यान्मेसदात्वयि ४३ इतिस्तुत्वारमानाथमगस्त्योमु
निसत्तमः ददौचापंमहेंद्रेणरामार्थेस्थापितंपुरा ४४ अक्षय्यौबाणतूणीरौ खड्गोरत्नविभूषितः ज
हिराघवभूभारभूतंराक्षसमंडलम् ४५ यदर्थमवतीर्णोऽसिमाययामनुजाकृतिः इतोयोजनयु-
गमेतुपुण्यकाननमंडितः ४६ अस्तिपंचवटीनाम्ना आश्रमोगोतमीतटे नेतव्यस्तत्रतेकालः शेषोरघु
कुलोद्वह ४७ तत्रैवबहुकार्याणिदेवानांकुरुसत्तम ४८

द्भक्तेषुविशेषतः संगोभूयादित्यनुकर्षः ४१ क्रतवः सफ
लाःबभूवुः त्वद्वीतिरेवक्रतूनांमुख्यंफलम् साच्चमदाश्रमेआगमनात् त्वयाव्यक्तीकृता उक्तमेवार्थंभंग्यंतरेणाह दी
र्घेति ४२ अथस्वेष्टंप्रार्थयते सदाइति ४३ ४४ बाणतूणीरौ बाणपूर्णौ तूणीरौ ४५ ४६ ४७ ४८

अशेषविद्पिमानुष्यंनाटयन् प्रदर्शितंमार्गंययौ ४९ इतिश्रीमदध्यात्मरामायणे अरण्यकांडेटीकायां तृतीयःसर्गः३ मार्गे
इति ददर्श हस्वान्चकिमेतदितिविस्मितः १ २ ३ ४ वत्स्येवसामीत्यर्थः आर्षःप्रयोगः ५ ६ गृध्रमहाराजेतिषष्ठीतत्पु



श्रुत्वातदागस्त्यसुभाषितंवचः स्तोत्रंचतत्त्वार्थसमन्वितंविभुः मुनिंसमाभाष्यमुदान्वितोययौप्रद
र्शितंमार्गमशेषविद्धरिः ४९ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादे अरण्यकांडे तृतीयः
सर्गः३ श्रीमहादेवउवाच मार्गेव्रजन्ददर्शाथशैलशृंगमिवस्थितम् हस्वंजटायुषंरामः
किमेतदितिविस्मितः १ धनुरानयसौमित्रेराक्षसोऽयंपुरःस्थितः इत्याहलक्ष्मणंरामोहनिष्याम्यृषि
भक्षकम् २ तच्छ्रुत्वारामवचनंगृध्रराट्भयपीडितः वधार्होऽहंनतेरामपितुस्तेऽहंप्रियःसखा ३ज
टायुर्नामभद्रंतेगृध्रोऽहंप्रियकृत्तव ४ पंचवट्यामहंवत्स्येतवैवप्रियकाम्यया मृगयायांकदाचित्तुप्र
यातेलक्ष्मणेऽपिच ५ सीताजनककन्यामेरक्षितव्याप्रयत्नतः श्रुत्वातद्गृध्रवचनंरामःसस्नेहमब्रवी
त् ६ साधुगृध्रमहाराजतथैवकुरुमेप्रियम् अत्रैवमेसमीपस्थोनातिदूरेवनेवसन् ७ इत्यामंत्रित
मालिंग्ययययौपंचवटींप्रभुः लक्ष्मणेनसहभ्रात्रासीतयारघुनंदनः ८ गत्वातेगौतमीतीरेपंचव-
ट्यांसुविस्तरम् मंदिरंकारयामासलक्ष्मणेनसुबुद्धिना ९

रुषः अत्रैववनेवसन्मेप्रियंकुर्वितिसंबंधः ७ आमंत्रितंसम्यक्बोधितंगृध्रमालिंग्येत्यर्थः ८ तेगौतमीतीरे गोदावरी
तीरेगत्वापंचवट्यांपंचवटसमीपेस्थिताः ततस्तत्ररामोलक्ष्मणेनसुविस्तरंमंदिरंकारयामास ९ ७ ७

गंगायाः गंगात्रगौतम्येव १० जनसंबाधोजनसमूहः निष्क्रांतारुजापीडायस्मात्ताहशस्थलेलक्ष्मणेनसह अध्युवासेतिसंबंधः
११ १२ १३ १४ १५ १६ एकांतिकींगतिम् अव्यभिचारिकारणमित्यर्थः १७ ननुमोक्षकारणंज्ञानमितिप्रसिद्धमेवेतित्त्वे
त्स्वरूपमेवप्रश्नविषयइत्याह ज्ञानमिति ज्ञानंश्रवणमननजन्यंविज्ञानंनिदिध्यासनजंभक्तिर्ज्ञानविषयेप्रेमउक्तस्वरूपंवैराग्यं

तत्रतेन्यवसन्सर्वेगंगायाउत्तरेतटे कदंबपनसाम्रादिफलवृक्षसमाकुले १० विविक्तेजनसंबाधवर्जि
तेनिरुजस्थले विनोदयन्जनकजांलक्ष्मणेनविपश्चिता ११ अध्युवाससकरवरामोदेवलोकइवामल-
ः कंदमूलफलादीनिलक्ष्मणोनुदिनंतयोः १२ आनीयप्रददौरामसेवातत्परमानसः धनुर्बाणध-
रोनित्यंरात्रौजागर्तिसर्वतः १३ स्नानंकुर्वत्यनुदिनंत्रयस्तेगौतमीजले उभयोर्मध्यगासीताकुरुतेच
गमागमौ १४ आनीयसलिलंनित्यंलक्ष्मणःप्रीतमानसः सेवतेऽहरहःप्रीत्याएवमासन्सकरवंत्रयः
१५ एकदालक्ष्मणोरामभेकांतेसमुपस्थितम् विनयावनतोभूत्वापप्रच्छपरमेश्वरम् १६ भगवन्श्रो
तुमिच्छामिमोक्षस्यैकांतिकींगतिम् त्वत्तःकमलपत्राक्षसंक्षेपाद्वक्तुमर्हसि १७ ज्ञानंविज्ञानसहितं
भक्तिवैराग्यबृंहितम् आचक्ष्वमेरघुश्रेष्ठवक्तानान्योस्तिभूतले १८ श्रीरामउवाच शृणुवक्ष्यामि
तेवत्सगुह्याद्गुह्यतरंपरम् यद्विज्ञायनरोजह्यात्सद्योवैकल्पिकंभ्रमं १९

तदतिरिक्तेप्रेमाभावरूपम् १८ वैकल्पिकंभ्रमंविकल्पएव
वैकल्पिकं विनयादित्वाट्ठक् शब्दज्ञानानुपातीवस्तुशून्योविकल्पइतियोगसूत्रोक्तविकल्परूपंभ्रमं यथाशशशृंगादि यद्यपितदलीकमे
वतथापिशशशृंगादिशब्दप्रयोगस्ततोबोधश्चभवत्येव तद्वदेवसर्वोपिव्यवहारःसंसाररूपस्तंयज्ज्ञानेनजह्यात् तद्गुह्यंवक्ष्यामीत्यन्वयः
१९

तदुपयोगितयावक्ष्यमाणान्यन्यानिनाममात्रेणक्रमतउद्दिशति आदाविति २० तत्रमायास्वरूपमाह अनात्मनीति आत्मबुद्धिः अहमि
तिबुद्धिः २१ परिकल्प्यते अवस्तुभूतएवदृश्यते अथतादृशशक्तिमत्त्वंमायायाः दर्शयति रूपेइति पूर्वमित्यनेनतयोरूपयोरनादित्वंद
र्शयति २२ केतेरूपेतत्राह विक्षेपावरणेइति विक्षेपशक्तिरावरणशक्तिश्चेत्यर्थः प्रथमंविक्षेपरूपंलिंगंमहत्तत्वमाद्यंयस्यतच्चत
त् ब्रह्मपर्यंतं चतुर्मुखब्रह्मांतमित्यर्थः २३ अपरमावरणरूपं तस्यान्वर्थत्वमाह अखिलमिति सर्वज्ञानरूपावरकत्वात् आ

आदौमायास्वरूपंतेवक्ष्यामितदनंतरम् ज्ञानस्यसाधनंपश्चात्ज्ञानंविज्ञानसंयुतम् २० ज्ञेयंचपर
मात्मानंयज्ज्ञात्वामुच्यतेभयात् अनात्मनिशरीरादावात्मबुद्धिस्तुयाभवेत् २१ सैवमायातयैवासौसं
सारःपरिकल्प्यते रूपेद्वेनिश्चितेपूर्वंमायायाःकुलनंदन २२ विक्षेपावरणेतत्रप्रथमंकल्पयेज्जगत् लिंगा
द्याब्रह्मपर्यंतंस्थूलसूक्ष्मविभेदतः २३ अपरंत्वखिलंज्ञानरूपमावृत्यतिष्ठति माययाकल्पितंविश्वंपरमात्म
निकेवले २४ रज्जौभुजंगवद्भ्रांत्याविचारेनास्तिकिंचन श्रूयतेदृश्यतेयद्यत्स्मर्यतेवानरैःसदा २५ अ
सदेवहितत्सर्वंयथास्वप्नमनोरथौ देहएवहिसंसारवृक्षमूलंदृढंस्मृतम् २६

वरणव्यवहारस्तत्रेतिभावः ननुमा
याकुत्राधिष्ठानेइदंजगत्कल्पितवतीतत्राह परमात्मनीति तद्रूपंचैतन्यमाच्छाद्यजगद्रूपंदर्शितमित्यर्थः २४ तत्रदृष्टांतमाह रज्जा
विति रज्ज्वज्ञानंयथारज्जुमाच्छाद्यभुजंगंकल्पयति तद्वत् विचारे विचारणेऽधिष्ठानतत्त्वज्ञाने २५ सर्वस्यमिथ्यात्वेदृष्टांतौ स्वप्नेति य
थास्वप्नेश्रुतंदृष्टंस्मृतंचसर्वंमिथ्या जागरे अननुभवात् तद्वत् देहएवेति तस्यैवसंसारकारणकर्मोत्पादकत्वादितिभावः २६

तदाह तन्मूलइति अन्यथादेहाभावेनेपुत्रादय आत्मनः किंभवंति नकिमपीत्यर्थः तत्रसूक्ष्मस्थूलदेहौ एकीकृत्याह देहइति स्थूलभूतपंचकः स्थूलदेहः अहंकारबुद्धिदशेंद्रियाणिचमनः पंचतन्मात्राणि इत्येवावानष्टादशात्मकोलिंगदेहः सूक्ष्मः २७ चिदाभासइति तस्यविशेषणम् चिदाभासतेअहमितिबुध्याविषयीक्रियतइत्यर्थः मूलप्रकृतिरीश्वरो देहः एतत्संघस्यजडत्वाद्देहक्षेत्रादिसंज्ञा २८ जीवः सएवपरमात्मा २९ अत्रजीवेपरमात्मनिचतथात्रमानाभावः देशतः कालतश्चपरिच्छेदाभावः अथतद्वि

तन्मूलः पुत्रदारादिबंधः किंतेऽन्यथात्मनः देहस्तुस्थूलभूतानांपंचतन्मात्रपंचकम् अहंकारश्चबुद्धिश्चइंद्रियाणितथादश २७ चिदाभासोमनश्चैवमूलप्रकृतिरेवच एतत्क्षेत्रमितिज्ञेयंदेहइत्यभिधीयते २८ एतैर्विलक्षणोजीवः परमात्मानिरामयः तस्यजीवस्यविज्ञानेसाधनान्यपिमेशृणु २९ जीवश्चपरमात्माचपर्यायोनात्रभेदधीः मानाभावस्तथादंभहिंसादिपरिवर्जनम् ३० पराक्षेपादिसहनंसर्वत्रावक्रतातथा मनोवाक्कायसद्भक्त्यासद्गुरोः परिसेवनम् ३१ बाह्याभ्यंतरसंशुद्धिः स्थिरतासत्क्रियादिषु मनोवाक्कायदंडश्चविषयेषुनिरीहता ३२ निरहंकारताजन्मजराद्यालोचनंतथा असक्तिः स्नेहशून्यत्वंपुत्रदारधनादिषु ३३

ज्ञानसाधनान्याह दंभेत्यादि ३० परेति परकृताक्षेपादिर्निंदादितत्सहनं मनोवाक्कायकृत सद्भक्त्याप्रेम्णा सद्गुरुसेवनम् ३१ बाह्याभ्यंतरसंशुद्धिः उक्तरूपैवसत्क्रियादिषुस्थिरता अवश्यकर्तव्यताबुद्धिः परानिष्टाचिंतनं मनोदंडः पराक्षेपाकरणंवाग्दंडः पराहिंसाकायदंडः निरीहताइच्छाराहित्यम् ३२ जन्मजराद्यालोचनं परेषांतदालोचन मूलकंवैराग्यम् पुत्रादिष्वसक्तिः तस्यैवव्याख्यानंस्नेहशून्यत्वम् ३३ ५ ७

चित्तस्यसमताहर्षविषादराहित्यम् अनन्यविषयातन्मात्रविषया ३४ जनसंबाधोजनसमूहः प्राकृतैःसांसारिकैः अरतिःअ
प्रीतिः ३५ आत्मज्ञानेतत्साधनेश्रवणादावुद्योगः आदरपूर्वकोयत्नः वेदांतार्थस्यावलोकनंश्रवणंविचारश्चविपर्ययःसं-
सारः ३६ बुद्ध्यादिभ्योविलक्षणइत्यादिनिश्चयम् ३७ येनज्ञानेनययाशब्दादिजवृत्त्यासंवित्तेलभते तज्ज्ञानमितिमेनिश्चि

इष्टानिष्टागमेनित्यंचित्तस्यसमतातथा मयिसर्वात्मकेरामेह्यनन्यविषयामतिः ३४ जनसंबाध
रहितशुद्धदेशनिषेवणम् प्राकृतैर्जनसंघैश्चह्यरतिःसर्वदाभवेत् ३५ आत्मज्ञानेसदोद्योगोवे
दांतार्थावलोकनम् उक्तैरेतैर्भवेज्ज्ञानंविपरीतैर्विपर्ययः ३६ बुद्धिप्राणमनोदेहाहंकृतिभ्योविल
क्षणः चिदात्माहंनित्यशुद्धोबुद्धएवेतिनिश्चयम् ३७ येनज्ञानेनसंवित्ते तज्ज्ञानंनिश्चितंचमे वि
ज्ञानंचतदेवैतत्साक्षादनुभवेद्यदा ३८ आत्मासर्वत्रपूर्णःस्याच्चिदानंदात्मकोऽव्ययः बुद्ध्याद्युपा-
धिरहितःपरिणामादिवर्जितः ३९ स्वप्रकाशेनदेहादीन्भासयन्ननपावृतः एकएवाद्वितीयश्चस
त्यज्ञानादिलक्षणः ४०

तंनिश्चयः तदेवैतत् यदासाक्षादनुभवेत् निदिध्यासनपरिपाके अपरोक्षमनुभवेत्तदाविज्ञा
नमित्युच्यते ३८ अथात्मनउक्तंबुद्ध्यादिभ्योवैलक्षण्यंदर्शयति आत्मेति चिदेवानंदस्तदात्मकः यद्वा चित् आनंदसमृ
द्धिस्तदात्मकः बुद्ध्याद्युपाधिभिस्तद्धर्मैरागादिभीरहितः हीनः परिणामोरूपांतरापत्तिः तद्वर्जितः आदिपदेनजडत्वभास्य
त्वादि ३९ सएवसर्वभासकइत्याह स्वप्रकाशेनेति सत्यज्ञानादीति सत्यंज्ञानमनंतंब्रह्मेत्यादिश्रुत्युक्तलक्षणः ४० ७

स्वप्रभः स्वभासेनइतरभासकानपेक्षद्रष्टासर्वसाक्षीविज्ञानेनप्रागुक्तेनावगम्यतेविषयीक्रियतेतस्यज्ञानस्यमुख्यंकारणमाह आ
चार्येति आचार्यकृततत्त्वमस्यादिशास्त्रोपदेशात् जीवपरयोरात्मनोर्यदैक्यज्ञानंतदपरोक्षानुभवः भवेत् तदैवमूलाविद्या-
कार्यस्थूलंकरणमिंद्रियं तैः सहपरमात्मनिलीयते ४१ ४२ सैवावस्थामुक्तिर्मूलाविद्यालयएवमुक्तिरित्यर्थः ४३ आत्मनः शुद्ध
स्यसर्वथाऽविद्याऽस्पृष्टस्यभेदरहितस्यऐक्यज्ञानमविद्यालयइत्यपिव्यवहारः कंठचामीकरन्यायेनगौणइत्यर्थः यथाकंठस्थंचा

असंगः स्वप्रभोद्रष्टाविज्ञानेनावगम्यते आचार्यशास्त्रोपदेशादैक्यज्ञानंयदाभवेत् ४१ आत्मनो
जीवपरयोर्मूलाविद्यातदैवाहि लीयतेकार्यकरणैः सहैवपरमात्मनि ४२ सावस्थामुक्तिरित्युक्ता
ह्युपचारोऽयमात्मनि इदंमोक्षस्वरूपंतेकथितंरघुनंदन ४३ ज्ञानविज्ञानवैराग्यसहितंमेपरात्म
नः किंत्वेतद्दुर्लभंमन्येमद्भक्तिविमुखात्मनाम् ४४ चक्षुष्मतामपियथारात्रौसम्यक्नदृश्यते पदंदीप
समेतानांदृश्यतेसम्यगेवहि ४५ एवंमद्भक्तियुक्तानामात्माससम्यक्प्रकाशते मद्भक्तेः कारणंकिंचि
द्वक्ष्यामिशृणुतत्त्वतः ४६

मीकरमन्यत्रान्विष्यति नष्टंतदितिबुध्द्या अरेकंठेएवास्तेइतिकेनचिदुक्तेलब्धंतदिति
व्यवहरति नहतु एवंज्ञानादिसहितंमेपरात्मनोमोक्षस्वरूपंतेकथितम् यामोक्षावस्थोक्तातदेवमेस्वरूपमित्यर्थः मद्भक्ति
विमुखात्मनां मत्प्रेमहीनानाम् ४४ यथा सनेत्राणामपिरात्रौपदंचोरादिपदंनदृश्यते नदृग्विषयंभवति दीपसमेतानांतुतेषां
तत्तदृग्विषयंभवति ४५ एवंभक्तियुक्तानांसम्यक्मत्प्रकाशोभवति ४६

अथप्रतिज्ञातानिभक्तिकारणान्याह मद्भक्तेति मद्भक्तानांनिरंतरमित्यत्रसेवेत्यनुषज्यते एकादश्युपवासादितदनुष्ठानमित्यर्थः
ममयानिपर्वाणि उत्सवदिनानि रामनवम्यादीनितेषामनुमोदनं तेषूत्सवकरणम् ४७ परिनिष्ठातत्परता ४८ ततोमद्भक्तेर-
धिकंज्ञानसाधनंकिमवशिष्यते नकिमपीत्यर्थः ४९ तदेवस्फुटमाह अतइति ५० ५१ ५२ अज्ञानपटलकृतंध्वांतमित्य-

मद्भक्तसंगोमत्सेवामद्भक्तानांनिरंतरम् एकादश्युपवासादिममपर्वानुमोदनम् ४७ मत्कथाश्रवणेपा
ठेव्याख्यानेसर्वदारतिः मत्पूजापरिनिष्ठाचममनामानुकीर्तनम् ४८ एवंसततयुक्तानांभक्तिरव्य
भिचारिणी मयिसंजायतेनित्यंततःकिमवशिष्यते ४९ अतोमद्भक्तियुक्तस्यज्ञानंविज्ञानमेवच
वैराग्यंचभवेच्छीघ्रंततोमुक्तिमवाप्नुयात् ५० कथितंसर्वमेतत्तेतवप्रश्नानुसारतः अस्मिन्मनःसमा
धाययस्तिष्ठेत्सतुमुक्तिभाक् ५१ नवक्तव्यमिदंयत्नान्मद्भक्तिविमुखायहि मद्भक्तायप्रदातव्यमाहूया
पिप्रयत्नतः ५२ यइदंतुपठेन्नित्यंश्रद्धाभक्तिसमन्वितः अज्ञानपटलध्वांतंविधूयपरिमुच्यते ५३ भ
क्तानांममयोगिनांसुविमलस्वांतातिशांतात्मनांमत्सेवाभिरतात्मनांचविमलज्ञानात्मनांसर्वदा सं-
गंयःकुरुतेसदोद्यतमतिःसत्सेवनानन्यधीर्मोक्षस्तस्यकरेस्थितोहमनिशंदृश्योभवेनान्यथा ५४
इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअरण्यकांडेचतुर्थःसर्गः ४

र्थः ५३ ममभक्तानामतएवयोगि
नांमद्भक्तियोगवतांसुविमलंस्वांतंहृदयंयेषांतेचतेःतिशांतात्मानश्चातिशांतचित्ताश्चतेषांमत्सेवायामभिरतंप्रीतियुतं आत्माचित्तंयेषां
विमलज्ञानरूपआत्मायेषांज्ञानविषयस्तेषामुद्यताज्ञानविषयेउद्यमशालिनीमतिर्यस्यसः सतांसेवनेऽनन्यधीस्तत्परइत्यर्थः तस्यानिश
महंदृश्योभवे आत्मनेपदमार्षम् नान्यथाताहृशसंगंविनानमद्दर्शनंनापिमोक्षइत्यर्थः ५४ इत्यध्यात्मटीकायांचतुर्थःसर्गः ४

